प. १

अथ संध्योपासनं लिख्यते आदौ शरीरशुद्धिः कर्तव्या सा बाह्याजलादिना आभ्यन्तरा रागद्वेषासत्यादित्यागेन अत्र प्रमाणम् ॥ अद्भिर्गात्राणि शुध्यन्ति मनः सत्येन शुध्यति विद्यातपोभ्यां भूतात्मा बुद्धिर्ज्ञानेन शुध्यति १ इत्याह मनुः ॥ ततो दर्भैर्हस्तेन वा मार्जनं कुर्यात् ॥ पुनर्भूलं भूतस्त्रीन् प्राणायामान् कुर्यात् ततो गायत्री मंत्रेण शिखां बध्वा रक्षां कुर्यात् ॥

शरीरशुद्ध्याद्यर्थैः एतैः कृत्वा ततो आचम
नं कार्यम् ॥ अथाचमनमन्त्रः ॥ ओं शन्नो
देवीरभिष्टय आपो भवन्तु पीतये ॥ शं
योरभिस्रवन्तु नः ॥ यजु० अ० ३६ मं० १२ ॥
अनेन मंत्रेण त्रिराचामेत् ॥ अथेन्द्रियस्पर्शः
ओं वाक् २। ओं प्राणः २ ओं चक्षुः २ ओं
श्रोत्रम् २। ओं नाभिः। ओं हृदयम् ॥
ओं कण्ठः ॥ ओं शिरः ओं बाहुभ्यां यशो
बलम् ॥ ओं करतलकरपृष्ठे ॥

॥ अथेश्वरप्रार्थनापूर्वकमार्ज्जनमंत्राः ॥
ओं भूः पुनातु शिरसि ॥ ओं भुवः पुनातु नेत्रयोः ॥ ओं स्वः पुनातु कंठे ॥ ओं महः पुनातु हृदये ॥ ओं जनः पुनातु नाभ्याम् ॥ ओं तपः पुनातु पादयोः ॥ ओं सत्यं पुनातु पुनश्शिरसि ॥ ओं खं ब्रह्म पुनातु सर्वत्र ॥
॥ अथ प्राणायाममंत्राः ॥ ओं भूः ॥ ओं भुवः ओं स्वः ओं महः ओं जनः ओं तपः ओं सत्यं तैत्ति० प्रपा० १० अनु० २७ इति प्राणायाममं-

अथेश्वरस्य जगदुत्पादनद्वारास्तुत्याघम
र्षण मंत्रः ॥ पापदूरीकरणार्थीः ओम् ऋ
तञ्च सत्यञ्चाभीद्धात्तपसोध्यजायत ततो
रात्र्यजायत ततः समुद्रो अर्णवः १॥
समुद्रादर्णवादधि संवत्सरो अजायत।
अहोरात्राणि विदधद्विश्वस्य मिषतो वशी २
सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्॥
दिवञ्च पृथिवीञ्चान्तरिक्षमथो स्वः ३ ॥

४

ततो ह्यान्नोदेवी रितिमंत्रेत्र पुनराचामेत्
ततः सूर्योदयात्प्रतिष्ठन्सन् अर्घ्यं त्रिवा
रपूर्विकां गायत्रीं जपेत् ॥ पुनः सूर्योदयेस्त
तिष्ठ गायत्रिमंत्रेण अर्घत्रयं दद्यात् ॥ अथप
रिक्रमणमंत्राः ॥ ओं भगवे नमः ॥ ओमिन्द्रा
यनमः ॥ ओं अगस्त्यये नमः ओं यमायनमः
ओं सारस्वतायनमः ओं वरुणायनमः ओं
वशिष्ठायनमः ओं कुबेरायनमः ओं परब्रह्म
णे नमः एतैर्नामभिः पूर्वादिक्रमेण परिक्र
मां कुर्वन् ईश्वरं ध्यायेत् ॥